तथा ब्रह्मणो वेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः असि मयीत्य-नुवर्त्तते । ब्रह्मकोशोऽसि ब्रह्मणः शब्दरूपस्य कोशः गोपनगृहं गुप्ति-स्थानं मयि असि । तथा सति मम जीवनमसि तथा शांतिरसि शांतिरसि शांतिः अनिष्टस्य अनिष्टहेतोश्च शमनमसि । तथा निरा-करणं निराकृतिःपरित्यागः न निराकरणम् अनिराकरणमसि । ब्रह्मणः कोशं मे विश मे मम ब्रह्मकोशं हृदयं विश 'सर्वेषां वेदानाᳬं हृदयमे-कायनम्' इति श्रुतेः । वाचागिरा त्वा त्वाम् अपिदधाम्याच्छदयामि स्वराः उदात्तानुदात्तस्वरिताः करणानि शब्दोत्पत्तेः शब्दाभिव्यक्ते-र्वासाधनानि । उरः कंठः शिरो जिह्वा मूलदंतनासिकौष्ठतालूनि, इत्यष्टौ कंठे भवाः कंठ्या अवर्णहकारवर्णविसर्गाः उरसि भवा औरसा हकाररहिताः वर्गपंचमांतस्थाः दंतेषु भवा दंत्याः लवर्णतवर्गसकाराः ओष्ठे भवा ओष्ठ्याः उवर्णपवर्गोपध्मानीयाः स्वराश्च करणानि च कंठ्याश्च औरसाश्च दंत्याश्च ओष्ठ्याश्च स्वरकरणकंठ्यौरसदंत्योष्ठ्याः । एतेषां ग्रहणमुपादानं धारणं स्थिरीकरणमुच्चारणं प्रयोगग्रहणधारणोच्चा-रणानितेषु मयि शक्तिर्भवतु' स्वरादीनां धारणादेर्मयिसामर्थ्यमस्तु । मे मम अंगानि गात्राणि आप्यायंतुवर्द्धतां, न केवलमंगानि किंतु वाक् गीः प्राण घ्राणेंद्रियं प्राणो वायुः सूत्रात्मेति यावत् चक्षुः नयनेंद्रियं, श्रोत्रं श्रव-णेंद्रियं यशः कीर्तिः बलं शारीरमोजः । एतान्यपि वागादीनि चाप्यायंत्वित्यनुषंगः । यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु । यन्मे मया श्रुतं मीमांसादि अधीत्य ऋगादि तत्सर्वं मे मनसि तिष्ठतु स्थिरीभवतु । अत्र वीप्सा अर्थभूयस्त्वप्रतिपादनार्था ग्रंथसमाप्तिज्ञाप-नार्था वा ॥ इति सूत्रार्थः ॥ इति पा०गृ०हरि०षोडशीकंडिका॥१६॥

अथ पृष्टोदिविविधानम् ॥ अथ परिशिष्टोक्तं पृष्टोदिविविधानं वक्ष्या-मि । केशांतादूर्ध्वमपत्नीक उत्सन्ननिरग्निकोऽप्रवासी ब्रह्मचारी वा मातृ-पूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अन्वग्निरित्यनयर्चाग्निमाहृत्य पंचभू-संस्कारं कृत्वा पृष्टोदिविपृष्टोअग्निः पृथिव्यामित्यनयर्चाग्नेः स्थापनं व्याहृतिभिः ताᳬं सवितुस्तत्सवितुर्विश्वानिदेवसवितरित्येताभिस्तिसृभिः

सावित्रीभिः प्रज्वालनमग्नेः, अथ तस्मिन्नग्नौ अक्षतहोमपंचमहायज्ञ-पिंडपितृयज्ञपक्षाद्याग्रयणादिकुर्यात्पूर्ववद्गृह्योक्तं पृष्टोदिविविधानम् ॥ इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां प्रयोगपद्धतौ तृतीयः काण्डः समाप्तः ॥ इति श्रीहरिहरभाष्यसहितं पारस्कराचार्यकृतं कातीयगृह्यसूत्रं समाप्तम् ॥

## ॥ परिशिष्टकंडिका ॥

अथातो वापीकूपतडागारामदेवतायतनपुष्करिण्याः प्रतिष्ठापनं व्याख्यास्यामः । तत्रोदगयनआपूर्यमाण-पक्षे पुण्याहे तिथिवारकरणे नक्षत्रे च गुणान्विते तत्र वारुणं यवमयं चरुꣳ श्रपयित्वाज्यभागाविष्ट्वा-ज्याहुतीर्जुहोति त्वन्नो अग्ने, सत्वन्नोअग्ने, इमंमे वरुण, तत्वायामि, ये ते शतमयाश्चाग्नउदुत्तममुरुꣳ हि राजा, वरुणस्योत्तम्भनमग्नेरनीकमिति दशर्चꣳहुत्वा स्थालीपाकस्य जुहोत्यग्नये स्वाहा । सोमाय स्वाहा । वरुणाय स्वाहा । यज्ञाय स्वाहा । उग्राय स्वाहा । भीमा-य स्वाहा । शतक्रतवे स्वाहा । व्युष्ट्यै स्वाहा । स्वर्गा-य स्वाहेति यथोक्तꣳस्विष्टकृत्प्राशनांते जलचराणि क्षिप्त्वालंकृत्य गांतारयित्वाचार्याय वरं दत्त्वा कर्णवे-ष्टकौ वासाꣳसि धेनुर्दक्षिणा ततो ब्राह्मणभोजनम् ॥१॥

॥ इति परिशिष्टकंडिका समाप्ता ॥

## ॥ समाप्तोऽयं ग्रन्थः ॥


### पुस्तक मिलनेका ठिकाना–

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण–मुंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस,
खेतवाडी–मुंबई.

